"हेमाभसा दृषवीर्जं स्नातो मन्त्रेण रोपयेत्।
वसुधेति सुधीनेति पुरन्दरेति धरेति च।
नमस्ते सुभगे नित्यं द्रुभोऽयं वर्द्धतामिति॥"

इति ज्योतिस्तत्त्वम्॥

बीजवृक्षः, पुं, (बीजादेव वृक्षो यस्य। बीजप्रधानो वृक्षो वा।) असनः। इति राजनिर्घण्टः॥

बीजसञ्चयः, पुं, (बीजानां सञ्चयः।) बीजसंग्रहः। तच्छुभाशुभदिनादिर्यथा,—
"हस्ताचित्रादितिस्वातीरेवत्यां श्रवणद्वये।
स्थिरे लग्ने गुरौ शुक्रे बीजं धार्य्यं च वासरे॥
माघे वा फाल्गुने वापि सर्व्वबीजानि संग्रहेत्।
शोषयेत्तापयेदृद्धि रात्रौ चोपनिधापयेत्॥
ततश्च पुटिकां बद्ध्वा शोषयेच्च पुनः पुनः।
स्थापयेच्च प्रयत्नेन यथा भूमिश्च न स्पृशेत्॥
दीपाग्निना च संस्पृष्टं वृष्ट्या चोपहतञ्च यत्।
वर्ज्जनीयं तथा बीजं यत् स्यात् कीटसमन्वितम्॥
याम्याहिरुद्राग्निविशाखपूर्व्वा-
सार्द्धेन्द्रपित्रोत्तरभे शुभाहे।
धान्यादिसंस्थापनमेषु शस्तं
स्थिरस्थिरद्वन्द्वगृहोदयेषु॥
सौम्यादितिमघाज्येष्ठानुराधरेषु च कारयेत्।
मीने लग्ने शुभे चन्द्रे निधनक्रूरवर्ज्जिते॥
देहस्थं कौलके धान्यं गर्गो वदति सर्व्वदा।
धनदाय सर्व्वलोकहिताय देहि मे धान्यं स्वाहा।
नम ईडायै ईडादेवी सर्व्वलोकविवर्द्धिनी कामरूपिणि धान्यं देहि स्वाहा।
लेखयित्वा इमं मन्त्रं धान्यागारे विनिक्षिपेत्॥"
पुराणसर्व्वस्वे।
"मन्त्रं लिखित्वा पत्रे च मध्ये धान्यस्य धारयेत्।
पत्रञ्च धान्यराशिषु मूषिकादिनिवृत्तये॥
दक्षिणादिङ्मुखगमनं स्यादभिनवासु नारीषु।
व्ययमपि शस्यफलानां न बुधो बुधवासरे कुर्य्यात्॥
त्रिपूत्तरेषु रेवत्यां धनिष्ठावारुणेषु च।
एतेषु षट्सु विज्ञेयं धान्यनिष्क्रयणं बुधैः॥
श्रवणार्द्रं विशाखाध्रुवपौष्णपुनर्व्वसूनि पुष्यञ्च।
अश्विन्यश्च ज्येष्ठा धनधान्यविवर्द्धिनी कथिता॥"

इति ज्योतिस्तत्त्वम्॥

बीजसूः, स्त्री, (बीजानि सूते इति। सू+क्विप्।) पृथ्वी। इति हेमचन्द्रः॥

बीजाकृतं, त्रि, (बीजेन सह कृतं कृष्टमिति। "कृञो द्वितीयतृतीयशम्बबीजात् कृषौ।"५।४।५८। इति डाच्।) उप्तकृष्टम्। इत्यमरः॥ हे बीजेन सह कृष्टे क्षेत्रे। बीजेन सह कृतं कृष्टं बीजाकृतम्। तीयशम्बबीजेति डाच्। आदाप्तं पश्चात् कृष्टं उप्तकृष्टम्। इति भरतः॥

बीजाम्लं, क्ली, (बीजे अम्लोऽम्लरसो यस्य।) वृक्षाम्लम्। इति राजनिर्घण्टः॥

बीजी, [न्] पुं, (बीजमस्यास्तीति। बीज+इनिः।) पिता। इति हेमचन्द्रः॥ (यथा, उद्वाहतत्त्वे।
"अतएव द्वैतनिर्णयेऽपि सापिण्ड्यगणने बीजिनमारभ्येत्युक्तम्॥" यथा च गौतमसंहितायाम्। ४।१।
"असमानप्रवरैर्व्विवाह ऊर्द्धं सप्तमात् पितृबन्धुभ्यो बीजिनश्च मातृबन्धुभ्यः पञ्चमात्॥")
बीजविशिष्टे, त्रि॥ (यथा, मनौ। ९।५१।
"तथैवाक्षेत्रिणो बीजं परक्षेत्रप्रवापिणः।
कुर्व्वन्ति क्षेत्रिणामर्थं न बीजी लभते फलम्॥")

बीजोदकं, क्ली, (बीजमिव कठिनमुदकम्। तस्य कठिनत्वात्तथात्वम्।) करका। इति त्रिकाण्डशेषः॥

बीजोप्तिचक्रं, क्ली, (बीजानामुप्तये शुभाशुभसूचकं चक्रम्।) बीजवपनजन्यशुभाशुभज्ञानार्थसर्पाकारचक्रम्। यथा,—
"सूर्य्यभाद्रगः स्यात्त्रिनाडीकान्तरक्रमात्।
मुखे त्रीणि गले त्रीणि भानि द्वादश तूदरे॥
पुच्छे चतुर्भिः पञ्च दिनभाच्च फलं वदेत्।
वदने चोचकं विद्यात् गलकेऽङ्गारकस्तथा॥
उदरे धान्यवृद्धिः स्यात् पुच्छे धान्यक्षयो भवेत्।
ईतिरोगभयं राश्ये चक्रे बीजोप्तिसम्भवे॥"
सूर्य्यभात् सूर्य्यमुच्यमानचक्रात्। त्रिनाडीकान्तरक्रमादिति यदाश्विन्यां रविस्तदा तामारभ्य गणयेत्। त्रिनाडीषु अश्विनीभरणीकृत्तिकासु दत्त्वा रोहिणी वह्निः कार्य्या मृगशिरस आर्द्रापुनर्व्वसुनाडीषु दत्त्वा पुष्यो वह्निः कार्य्यः। एवं क्रमेणान्या लेख्याः। चोचकं शस्यन्यूनताम्। ईतयः।
"अतिवृष्टिरनावृष्टिः शलभा मूषिकाः खगाः।
प्रत्यासन्नाश्च राजानः षडेते ईतयः स्मृताः॥"

इति ज्योतिस्तत्त्वम्॥

बीज्यः, त्रि, (विशेषेण इज्यः पूज्यः। अथवा बीजाय हितः इति। "उगवादिभ्यो यत्।"५।१।२। इति यत्।) यस्य कस्यचित् कुलभवः। तत्पर्य्यायः। कुलसंभवः २। इत्यमरः॥ वंश्यः ३ कौलकेयः ४ कुलजः ५। इति शब्दरत्नावली॥ कुलीनः ६ कुल्यः ७ कुलभवः ८। इति जटाधरः॥

बीटिः, स्त्री, (विशेषेण इटति छायानिखातयष्ट्यादिं वेष्टयित्वा प्रवर्द्धते। वि+इट+"इगुपधात् कित्।" उणा०४।११९। इति इन्। स च कित्।) ताम्बूलवल्ली। इति केचित्॥ सुसज्जीकृतताम्बूलम्। पानेर बीड़ा इति भाषा। इति केचित्॥

बीटिका, स्त्री, (बीटिरेव। स्वार्थे कन् स्त्रियामाप्।) ताम्बूलवल्ली। इति केचित्॥ सुसज्जीकृतताम्बूलम्। पानेर बीड़ि इति भाषा। इति केचित्॥ (यथा, राजतरङ्गिण्याम्। ४।४३०।
"भूसंज्ञयाथ कस्य त्वं पृष्टाया इति सुभ्रुवः।
ददत्या बीटिकास्तस्या वृत्तान्तमुपलब्धवान्॥")

बीटी, स्त्री, (बीटि+वा ङीष्।) ताम्बूलवल्ली। इति केचित्॥ सुसज्जीकृतताम्बूलम्। पानेर बीड़ि इति भाषा। इति केचित्॥

बीणा, स्त्री, (वेति वृद्धिमात्रमपगच्छतीति। वी गतौ+"रास्नासास्नास्थूणावीणाः।" उणा० ३।१५। इति नः निपातनाद्गुणाभावो णत्वञ्च।) विद्युत्। इति मेदिनी। णे, २८॥ (वेति श्रोतृचित्तं व्याप्नोतीति। वी व्याप्तौ+नः।) स्वनामख्यातवाद्यम्। तत्पर्य्यायः। वल्लकी २ विपञ्ची ३। सा तु सप्ततन्त्रीयुक्ता चेत्परिवादिनी ४। इत्यमरः॥ ध्वनिमाला ५। इति जटाधरः। घन्नमञ्जी ६ विपश्चिका ७। इति शब्दरत्नावली॥ घोषवती ८ कण्ठकूणिका ९। (यथा, महाभारते। ६।१३४।१४।
"सप्तर्षयः सप्त चाप्यर्हणानि
सप्ततन्त्री प्रथिता चैव वीणा॥")
तद्भेदा यथा। शिवस्य वीणा लम्बी १ सरस्वत्याः कच्छपी २ नारदस्य महती ३ गणानां प्रभावती ४ विश्वावसोः बृहती ५ तुम्बुरोः कलावती ६ चाण्डालानां कण्ठोलवीणा चाण्डालिका च ७। तस्याङ्गादीनां नामादि यथा। तस्याः कायः कोलम्बकः। तस्या निबन्धनं उपनाहः। तस्या दण्डः प्रवालः। तस्याः प्रान्तवक्रकाष्ठं ककुभः प्रसेवकश्च। तस्या मूले वंशशलाका कलिका कूणिकापि च। तस्या वादनं कोणः। इति हेमचन्द्रादयः॥ अस्या विवरणं वाद्यशब्दे द्रष्टव्यम्॥

बीणादण्डः, पुं, (वीणाया दण्डः।) वीणास्थितालाबूपरिकाष्ठम्। तत्पर्य्यायः। प्रवालः २। इत्यमरः॥

बीणानुबन्धः, पुं, (वीणाया अनुबन्धः।) उपनाहः। इति हारावली॥

बीणावादः, त्रि, (वीणां वादयतीति। वद+णिच्+अण्।) वीणावादकः। तत्पर्य्यायः। वैणिकः २। इत्यमरः॥ (यथा, वाजसनेयसंहितायाम्। ३०।१९।
"शब्दायाडम्बराघातं महसे वीणावादमिति॥")

बीनावादकः, पुं, (वीणायाः वादकः।) वीणावाद्यकर्त्ता। इति शब्दरत्नावली॥

बीणास्यः, पुं, (वीणा आस्यमिव यस्य। तयैव स्फुटगानकरणात्।) नारदः। इति जटाधरः॥

बीतं, क्ली, (वेति स्म। वी+क्तः। अथवा अजति स्म। अज्+गत्यर्थेति क्तः।) असारहस्त्यश्वम्। युद्धाक्षममित्यर्थः। इत्यमरः॥ अङ्कुशकर्म्म। इति मेदिनी। ते, ५८॥ (यथा, माघे। ५।४७।
"निर्धूतवीतमपि बालकमुल्ललन्तं
यन्ता क्रमेण परिसान्त्वनतर्ज्जनाभिः॥")
सांख्योक्तानुमानविशेषः। यथा, सांख्यतत्त्वकौमुद्याम्। ५।
"प्रथमं तावद्द्विविधं वीतमवीतञ्च। अन्वयमुखेन प्रवर्त्तमानं विधायकं वीतम्॥" तस्य विशेषविवरणं तत्रैव द्रष्टव्यम्॥ त्रि। कमनीयः। यथा, ऋग्वेदे। ४।७।६।
"तं शश्वतीषु मातृषु वन आ वीतमश्रितम्॥"
"वीतं कान्तम्।" इति तद्भाष्ये सायणः॥)

उद्दीर्थेन यद्वचनं वक्ष्यनाद्धास्यरोषकृत् ॥ * ॥
वाक्केलिर्हास्यसम्बन्धो द्वित्रिप्रत्युक्तितो भवेत् ॥
द्वित्रोत्युपलक्षणं यथा,—
भिक्षो मांसनिषेवणं प्रकुरुषे किन्तेन मद्यं विना
मद्यञ्चापि तव प्रियं प्रियमहो वाराङ्गनाभिः
सह ।
तासामर्थरुचिः कुतस्तव धनं द्यूतेन चौर्य्येण वा
चौर्य्यद्यूतपरिग्रहोऽपि भवतो नष्टस्य कान्या
गतिः ॥
केचित् प्रक्रान्तवाक्यस्य साकाङ्क्षस्यैव निवृत्ति-
र्वाक्केलिरित्याहुः । अन्ये चानेकस्य प्रश्नस्यै-
कमुत्तरम् ॥ * ॥
अन्योन्यवाक्याधिक्योक्तिः स्पर्द्धयाधिवलं मतम् ॥
यथा, मम प्रभावत्यां वज्रनाभः ।
अस्य वक्षः क्षणेनैव निर्मथ्य गदयानया ।
लीलयोन्मूलयिष्यामि भुवनद्वयमद्य वः ॥
प्रद्युम्नः । अरे रे असुरापसद अलमसुना बहु-
प्रलापेन मम खलु ।
अद्य प्रचण्डभुजदण्डसमर्पितोरु-
कोदण्डनिर्गलितकाण्डसमूहपातैः ।
आस्तां समस्तदितिजक्षतशोणितैयं
क्षौणी क्षणेन पिशिताशनलोभनीया ॥ * ॥
गण्डं प्रस्तुतसम्बन्धि भिन्नार्थं सत्वरं वचः ॥
यथा वेण्यां राजा ।
अध्यासितुं तव चिराज्जघनस्थलस्य
पर्य्याप्तमेव करभोरु ममोरुयुग्मम् ।
अनन्तरं प्रविश्य कञ्चुकी देव भग्नं भग्नमित्यादि ।
अत्र रथकेतनभङ्गार्थं वचनमूरुभङ्गार्थे सम्बन्धे
सम्बद्धम् ॥ * ॥
व्याख्यानं स्वरसोक्तस्यान्यथावस्यन्दितं भवेत् ॥
यथा छलितरामे सीता । जाद कालं क्खु उ
अज्झा॰ एव गन्तव्वं तहिं सो राआ विणएण
पणमिदव्वो । लवः । अथ किमावाभ्यां राजो-
पजीविभ्यां भवितव्यम् । सीता । जादओ
तुम्हाणं पिदा । लवः । किमावयो रघुपतिः
पिता । सीता । साशङ्कं मा अण्णधा सङ्कधणं
क्खु तुम्हाणं स आलाव्वे एव पुहवीएत्ति ॥ * ॥
प्रहेलिकैव हास्येन युक्ता भवति नालिका ॥
संवरणकार्य्युत्तरं प्रहेलिका । यथा रत्नावल्याम् ।
सुसङ्गता सहि जस्स कदे तुमं आअदा सो
इधज्जेव चिट्ठदि साअरिआ कस्स कदे अहं
आअदा सुसंगदे चित्तफलअस्स । अत्र त्वं राज्ञः
कृते आगतेत्यर्थः संवृतः ॥ * ॥
असत्प्रलापो यद्वाक्यमसम्बद्धं तथोत्तरम् ।
अगृह्णतोऽपि मूर्खस्य पुरो यच्च हितं
वचः ॥
तत्राद्यं यथा मम प्रभावत्याम् । प्रद्युम्नः सह-
कारवल्लीमवलोक्य सानन्दं अहो कथमिहैव ।
अलिकुलसङ्कुलकेशी
परिमलबहुला रसावहा तन्वी ।
किशलयपेशलपाणिः
कोकिलकलभाषिणी प्रियतमा मे ॥

एवमसम्बन्धोत्तरेऽपि । तृतीयं यथा । वेण्यां
दुर्य्योधनं प्रति गान्धारीवाक्यम् ।
व्याहारो यत् परस्यार्थे हास्यलोभकरं वचः ।
यथा मालविकाग्निमित्रे । लास्यप्रयोगावसाने
मालती निर्गन्तुमिच्छति विदूषकः मा दाव उप-
देश सुद्धा गमिष्यसि । इत्युपक्रमेण दासः ।
विदूषकं प्रति आर्य्य उच्यतां यस्तया क्रमभेदो
लक्षितः । विदूषकः पढमं । वह्मण पूआ भोदि
साइ साए लङ्घिदा मालती स्मयत इत्यादिना ।
नायकस्य विशुद्धनायिकादर्शनप्रयुक्तेन हास-
लोभकारिणा वचसा व्याहारः ॥ * ॥
दोषा गुणा गुणा दोषा यत्र स्युर्मृदवं हि तत् ॥
क्रमेण यथा,—
प्रियजीवितता क्रौर्य्यं निःस्नेहत्वं कृतघ्नता ।
भूयस्तद्दर्शनादेव ममैते गुणतां गताः ॥
तस्यास्तद्रूपसौन्दर्य्यं भूषितं यौवनश्रिया ।
सुखैकायतनं जातं दुःखायैव ममाधुना ॥
एतानि चाङ्गानि नाटकादिषु संभवन्त्यपि
वीथ्यामवश्यं विधेयानि निष्पष्टतया नाटकादिषु
विनिविष्टान्यपि इहोदाहृतानि । वीथी च
नानारसानाञ्चात्र मालारूपतया स्थितत्वाद्-
वीथीयम् । यथा मालविका ।” इति साहित्य-
दर्पणम् ॥ * ॥ * ॥ सूर्य्यगमनपथः । यथा,—
“नागवीथ्युत्तरा वीथी अजवीथ्यास्तु दक्षिणे ।
उभे आषाढ़मूलन्तु अजवीथ्युदयास्त्रयः ॥
अभिजित् पूर्व्वतः स्वाती नागवीथ्युत्तरास्त्रयः ।
अश्विनी कृत्तिका याम्या नागवीथ्युत्तराः स्मृताः ।
रोहिण्यार्द्रा मृगशिरो नागवीथिरिति स्मृता ॥
पुष्याश्लेषापुनर्व्वसोर्वीथिरैरावती स्मृता ।
तिस्रस्तु वीथयो ह्येता उत्तरो मार्ग उच्यते ॥
पूर्व्वा उत्तरफल्गुण्योर्मघाश्चैरावती भवेत् ।
पूर्व्वोत्तरे प्रोष्ठपदे गोवीथी रेवती स्मृता ॥
श्रवणा च धनिष्ठा च वारुणञ्च जरद्गवम् ।
एताश्च वीथयस्तिस्रो मध्यमो मार्ग उच्यते ॥
हस्ता चित्रा तथा स्वाती नागवीथिरिति स्मृता ॥
विशाखमित्रपैत्रञ्च नागवीथिरिहोच्यते ॥
मूलपूर्व्वोत्तराषाढ़ा वीथिर्वैश्वानरी तथा ।
स्मृतास्तिस्रस्तु वीथ्यस्ता मार्गे वै दक्षिणे बुधैः ॥”
इति मात्स्ये १०१ अध्यायः ॥ * ॥
अपि च ।
“उत्तरं यदगस्त्यस्य अजवीथ्याश्च दक्षिणम् ।
पितृयानः स वै पन्था वैश्वानरपथाद्बहिः ।
तत्रासते महात्मान ऋषयो येऽग्निहोत्रिणः ॥”
इति विष्णुपुराणे २ अंशे ८ अध्यायः ॥ * ॥
तत्र ज्योतिश्चक्रे वीथीक्रमो वायुनोक्तः ।
“सर्व्वग्रहाणां त्रीण्येव स्थानानि द्विजसत्तमाः ।
स्थानं जारद्गवं मध्यं तथैरावतमुत्तरम् ।
वैश्वानरं दक्षिणतो निर्द्दिष्टमिह तत्त्वतः ॥”
तदेव मध्यमोत्तरदक्षिणमार्गत्रयं प्रत्येकं वीथि-
त्रयेण त्रिधा भिद्यते । तथा हि त्रिभिस्त्रिभि-
रश्विन्यादिनक्षत्रैर्नागवीथी गजवीथी ऐरावती
चेत्युत्तरमार्गे वीथित्रयम् । आर्षभी गोवीथी
जारद्गवी चेति वैषुवते मध्यमार्गे वीथित्रयम् ।
अजवीथी मृगवीथी वैश्वानरी चेति दक्षिण-
मार्गे वीथीत्रयम् । तदुक्तं तत्रैव ।
“अश्विनी कृत्तिका याम्या नागवीथीति
शब्दिता ।
रोहिण्यार्द्रा मृगशिरो गजवीथ्यभिधीयते ॥
पुष्याश्लेषे तथादित्या वीथी चैरावती स्मृता ।
एतास्तु वीथयस्तिस्र उत्तरो मार्ग उच्यते ॥
तथा द्वे चापि फल्गुण्यौ मघा चैवार्षभी
मता ।
हस्ता चित्रा तथा स्वाती गोवीथीति तु
शब्दिता ॥
ज्येष्ठा विशाखानुराधा वीथी जारद्गवी मता ।
एतास्तु वीथयस्तिस्रो मध्यमो मार्ग उच्यते ॥
मूलाषाढ़ोत्तराषाढ़ा अजवीथीति शब्दिता ।
श्रवणञ्च धनिष्ठा च मार्गी शतभिषस्तथा ॥
वैश्वानरी भाद्रपदे रेवती चैव कीर्त्तिता ।
एतास्तु वीथयस्तिस्रो दक्षिणो मार्ग उच्यते ॥”
याम्या भरणी । आदित्या अदितिदेवताका
पुनर्व्वसुः । मार्गी मृगवीथी । एवं स्थिते
अगस्त्यादुत्तरमजवीथ्यास्तु दक्षिणम् । किन्तु
अगस्त्यनिरूढ़वर्त्तिनो वैश्वानरपथाद्बहिर्वैश्वा-
नरवीथीं विहाय मृगवीथीमात्रं पितृयान-
मित्यर्थः । इति तट्टीकायां श्रीधरस्वामी ॥
वीथ्यङ्गः, त्रि, ( वीथ्या अङ्गमिवाङ्गं यस्य । )
नाटकभेदः । इति हेमचन्द्रः ॥ अस्य विवरणं
वीथीशब्दे द्रष्टव्यम् ॥
वीध्रं, क्ली, ( विशेषेण इन्धते दीप्यते इति । वि+
इन्ध+“वाविन्धेः ।” उणा॰ २ । २६ । इति
क्रन् ।) नभः । (यथा, अथर्व्ववेदे ।४ । २० । ७।
“वीध्रे सूर्य्यमिव सर्पन्तं मा पिशाचं तिर-
स्करः ॥”)
वायुः । अग्निः । इति संक्षिप्तसारोणादि-
वृत्तिः ॥
वीध्रः, त्रि,(वि+इन्ध+क्रन्।) विमलः । इत्यमरः ॥
वीनाहः, पुं, (विशेषेण नह्यते इति । वि+नह+
घञ् । उपसर्गस्य दीर्घः । ) कूपस्य मुखबन्ध-
नम् । इत्यमरः ॥ अस्य कूपस्य यन्मुखबन्धनं
येन मुखं बध्यते तत्र वीनाहः नान्दीपट्ट इति
ख्यातः । विशेषेण नह्यते कूपमुखमनेन ।
वीनाहः । नह्य भ्रो बन्धे घञ् मतीपादित्वात्
वेर्व्वा दीर्घः विनाहः वीनाहः कूपमुखबन्ध-
पट्ट इति स्वाम्यः । इति भरतः ॥
वीपा, स्त्री, विद्युत् । इति शब्दरत्नावली ।
वीप्सा, स्त्री, क्रियागुणद्रव्यैर्युगपद्व्याप्तुमिच्छा ।
यथा,—
“सुक्तिर्न्नेऽच्युतोपास्तिं भूतं भूतमभि प्रभुः ।
भक्तो विभुमभि प्राज्ञो गोविन्दमभितिष्ठति ॥”
अच्युतोपास्तिं ऋते सुक्तिर्न स्यादित्यर्थः ।
प्रभुरीश्वरः भूतं भूतं अभि सर्व्वप्राणिषु अस्ति
इत्यर्थः । वीप्सायां प्रयुक्तस्य पदस्य द्विर्भावः ।
इति मुग्धबोधटीकायां दुर्गादासः ॥

वीर, ऌ तु क ग्रौर्य्ये। इति कविकल्पद्रुमः॥ (अदन्तचुरा०-आत्म०-अक०-सेट्।) ऌ, अवि-वीरत। शौर्य्यमुद्यमः। इति दुर्गादासः॥

वीरं, क्ली, (अज+"स्फायितञ्चिवञ्चीति।" उणा० २।१३। इत्यादिना रक्। अजे-र्वीभावः। वीर+अच् वा।) ऋद्धी। नडः। इति मेदिनी। रे, ६७॥ मरिचम्। पुष्कर-मूलम्। काञ्जिकम्। उशीरम्। आरूकम्। इति राजनिर्घण्टः॥ वीरशब्दो मेदिन्यां पव-र्गीयवकारादौ दृष्टोऽपि वीरधातोरन्तःस्थवका-रादौ दर्शनादत्र लिखितः॥

वीरः, पुं, (वीरयतीति। वीर विक्रान्तौ+पचा-द्यच्। यद्वा, विशेषेण ईरयति दूरीकरोति शत्रून्। वि+ईर+इगुपधात् कः। यद्वा, अजति क्षिपति शत्रून्। अज+स्फायितञ्चीत्या-दिना रक्। अजेर्व्वीः।) शौर्य्यविशिष्टः। तत्प-र्य्यायः। शूरः २ विक्रान्तः ३। इत्यमरः।३।१। ७७॥ गम्भीरः ४ तरस्वी ५। इति जटाधरः॥ (यथा, महाभारते। १।१४१।४५।

"त्वयाशो बुद्धयैव बुद्धिमानपि बुधिकः।
निर्ज्जिता यत्त्वया वीरास्तस्माद्वीरतरो भवान्॥"

यथा च ऋग्वेदे। १।११४।८।

"वीरान्मानो रुद्रभामितो वधी-
र्हविष्मन्तः सदमि त्वा हवामहे॥"

"वीरान् वीक्रान्तान्।" इति सायणः॥ पुत्रः। यथा, ऋग्वेदे। ५।२०।४।

"वीरैः स्याम सधमादः॥"

"वीरैः पुत्रैश्च सधमादः सहमादन्तः स्याम तथा कुरु।" इति तद्भाष्ये सायणः॥ पतिः। पुत्रश्च। यथा, मार्कण्डेये। ३५।३१।

"न चालयेज्जनदियां वीरहीनां तथा स्त्रियम्।
गृहादुच्छिष्टविण्मूत्रपादाम्भांसि क्षिपेद्वहिः॥"

यथा च अवीरा निष्पतिसुता। इत्यमरदर्श-नाच॥*॥ दनायुदैत्यपुत्रः। यथा, महाभारते। १।६५।३३।

"दनायुषः पुनः पुत्राश्चत्वारोऽसुरपुङ्गवाः।
विक्षरो बलवीरौ च वृत्रश्चैव महासुरः॥")

जिनः। नटः। इति हेमचन्द्रः॥ विष्णुः। यथा, वीरोऽनन्तो धनञ्जयः। इति विष्णुसहस्रनाम॥ शृङ्गारादिरसमध्यगतरसविशेषः। तत्पर्य्यायः। उत्साहवर्द्धनः २। इत्यमरः॥

"उत्तमप्रकृतिर्वीर उत्साहस्थायिभावकः।
महेन्द्रदैवतो हेमवर्णोऽयं समुदाहृतः॥"

उत्साहं वर्द्धयति इति उत्साहवर्द्धनः नन्द्यादि-त्वाद्नः। दानधर्म्मयुद्धेषु औदार्य्यप्रयोत्साह-कारी रसो वीरः। वीरयन्ते अत्र वीरः। वीर ङ्ङु शौर्य्ये धञ् स्फीतवदेव स्यादयं इति मन्दि-रम्भवादित्यादि कटाक्षितम्। इति भरतः॥*॥ तान्त्रिकभावविशेषः। यथा,—

"तत्रैव त्रिविधो भावो दिव्यवीरपशुक्रमः।
दिव्यवीरैकमः प्रोक्तः सर्व्वसिद्धिप्रदायकः॥"

इति रुद्रयामले ११ पटलः॥

अपि च।

"भावस्तु त्रिविधः प्रोक्तो दिव्यवीरपशुक्रमात्।
गुरवश्च त्रिधा चात्र तथैव मन्त्रदेवता॥"

इति तत्रैव ६ पटलः॥

अन्यच्च।

"पशुभावं हि प्रथमे द्वितीये वीरभावकम्।
तृतीये दिव्यभावश्च इति भावत्रयं क्रमात्॥
आदौ दशमदण्डेन पशुभावमथापि वा।
मध्याह्ने दशदण्डेन वीरभावमुदाहृतम्।
सायाह्ने दशदण्डे तु दिव्यभावं शुभप्रदम्॥"

इति च तत्रैव १९ पटलः॥

अन्यच्च।

"जन्ममात्रं पशुभावं वर्षषोडशकावधि।
ततश्च वीरभावस्तु यावत् पञ्चाशतो भवेत्॥
द्वितीयांशे वीरभावस्तृतीये दिव्यभावकः।
एवं भावत्रयेणैव भावमेवं भवेत् प्रिये॥"

इति वामकेश्वरतन्त्रे ५१ पटलः॥

वीराचारविशिष्टः। यथा,—

"कुलाचाररतो वीरः कुलसङ्गी सदा भवेत्।
संविदासेवनं कुर्य्यात् सोमपानं महेश्वरि॥
सर्व्वथा कुरुते देवि वीरश्चोन्मत्तमानसः।
दिव्यस्तु देवता चायचन्दनागुरुलेपनैः।
रक्तचन्दनगन्धैश्च सुदिव्यो नात्र संशयः॥
भस्माङ्गधूसरो वीर उन्मत्तवद्विचेष्टितः।
सुरापानरतो नित्यं बलिपूजापरायणः॥
नरश्छागश्च महिषो मेषः शूकर एव च।
शशकः शल्लकी गोधा खड्गी कूर्म्मो दश स्मृताः॥
वानरश्च खरश्चैव गवाश्वादिविहङ्गमाः।
इत्यादिभिर्ब्बलिदानैः पूजयेत् इष्टदेवताम्॥
सिद्धमन्त्रो भवेद्वीरो न वीरो मद्यपानतः।
कलौ तु भारते वर्षे लोका भारतवासिनः।
गृहे गृहे सुरां पीत्वा वर्णभ्रष्टा भवन्ति हि॥"

इत्युत्पत्तितन्त्रम्॥८॥

कलौ तदाचारनिषेधो यथा,—

"दिव्यवीरमयो भावः कलौ नास्ति कदाचन।
केवलं पशुभावेन मन्त्रसिद्धिर्भवेन्नृणाम्॥"

इति महानिर्व्वाणतन्त्रम्॥*॥

तण्डुलीयः। वराहकन्दः। लताकरञ्जः। करवीरः। अर्ज्जुनः। इति राजनिर्घण्टः॥ यज्ञाग्निः। इति वीरदामशब्दटीकायां भरतः॥ उत्तरः। सुभटः। इति मेदिनी॥

वीरः, त्रि, श्रेष्ठः। इति हेमचन्द्रः॥ (कर्म्मठः। यथा, ऋग्वेदे। ८।२३।१६।

"इमं घा वीरो अमृतं वीरं कृण्वीतमर्त्यः॥"

"वीरः कर्म्मणि समर्थः।" इति तद्भाष्ये सायणः॥ यथा च। तत्रैव। ६।२३।३।

"कर्त्ता वीराय सुष्वय उ लोकं
दाता वसु स्तुवते कीरये चित्॥"

"वीराय यज्ञादि कर्म्मसु दक्षाय।" इति तद्भाष्ये सायणः॥ प्रेरयिता। यथा, तत्रैव। ६।६५।४।

"इदा हि वो विधते रत्नमस्तीदा
वीराय दाशुष उषासः॥"

"वीराय प्रेरयित्रे।" इति तद्भाष्ये सायणः॥)

वीरकः, पुं, (वीर एव। स्वार्थे कन्।) करवीरः। इति राजनिर्घण्टः॥ (विक्रान्तः। समर्थः। यथा, ऋग्वेदे। ८।८०।२।

"असौ य एषि वीरको गृहं गृहं विचाकशत्॥"

"वीरको वीरः समर्थस्त्वम्।" इति तद्भाष्ये सायणः॥ अपरान्तदेशविशेषवासी। यथा, महाभारते। ८।४४।४२।

"कारस्करान् माहिषकान् कालिङ्गान् केरला-स्तथा।
कर्कोटकान् वीरकांश्च दुर्द्धर्म्मांश्च विवर्ज्जयेत्॥"

चाक्षुषमन्वन्तरीयमनुन्यतमः। यथा, भाग-वते। ८।५।८।

"उत्तमस्तत्र वै राजन् इध्मस्ताद्वीरकादयः॥")

वीरजयन्तिका, स्त्री, (वीराणां जयन्तिकेव।) रणे वीराणां नृत्यम्। इति हेमचन्द्रः॥

वीरणं, क्ली, उशीरतृणम्। तत्पर्य्यायः। वीरणम् २ कटायनम् ३। इति शब्दरत्नावली॥ वीरतरम् ४। इत्यमरः॥ वीरभद्रम् ५। इति रुद्रः॥ (यथा, भागवते। १०।११।५१।

"तमापतन्तं स निगृह्य तुण्डयो-
र्दोर्भ्यां वकं कंससखं सतां गतिः।
पश्यत्सु बालेषु ददार लीलया
मुदावहो वीरणवद्दिवौकसाम्॥")

अपि च।

"स्याद्वीरणं वीरतरु वीरञ्च बहुमूलकम्।
वीरणं पाचनं शीतं स्तम्भनं लघु तिक्तकम्॥
मधुरं ज्वरहृद्वान्तिमेदजित् कफपित्तहृत्।
तृष्णास्रविषवीसर्पकृच्छ्रदाहव्रणापहम्॥
वीरणस्य तु मूलं स्यादुशीरमभयं तथा।
अमृणालञ्च सेव्यञ्च समगन्धिकमित्यपि॥
उशीरं पाचनं शीतं स्तम्भनं लघु तिक्तकम्।
मधुरं ज्वरहृद्वान्तिमदनुत् कफपित्तनुत्।
तृष्णास्रविषवीसर्पदाहकृच्छ्रव्रणापहम्॥"

इति भावप्रकाशः॥

(पुं, प्रजापतिविशेषः। यथा, महाभारते। १२।३४८।४१।

"सनत्कुमारादपि च वीरणो वै प्रजापतिः।
कृतादौ कुरुशार्दूल धर्म्ममेतदधीतवान्॥"

यथा च मात्स्ये। ४।४०।

"वीरणस्यात्मजायान्तु चक्षुर्म्मनुरजीजनत्॥")

वीरतरं, क्ली, वीरणम्। इत्यमरः॥

वीरतरः, पुं, शरः। इति भूरिप्रयोगः॥ (त्रि, सामर्थ्यवान्। यथा, ऋग्वेदे। ८।२४।१५।

"नराम पुराचन जज्ञे वीरतरस्त्वत्॥"

"वीरतरः सामर्थ्यवान्।" इति तद्भाष्ये सायणः॥ अयमनयोरतिशयेन वीरः। वीर-श्रेष्ठः। यथा, महाभारते। ४।५२।१७।

"नरर्षभास्ते तु नरर्षभेण
वीरा हते वीरतरेण भग्नाः॥")

वीरतरासनं, क्ली, ( वीरतराणां साधकश्रेष्ठानां आसनम् । ) आसनविशेषः । यथा,—
"स्टदु कोमलमास्तीर्य्य संग्रामपतितं हि यत् ।
जन्तुयापादितं वापि स्टतं वा नरमासनम् ॥
गर्भच्युतं त्वचं वापि नारीणां योनिजां त्वचम् ।
सर्व्वसिद्धिप्रदं देवि सर्व्वतोऽतिपरस्त्विदम् ।
त्वचं वा यौवनस्थानां कुर्य्याद्वीरतरासनम् ॥"
इति मुण्डमालातन्त्रे ३ पटलः ॥

वीरतरुः, पुं,(वीरस्तरुनाम्ना ख्यातस्तरुः ।) अर्ज्जुनवृक्षः । इत्यमरः ॥ कोकिलाक्षवृक्षः । इति रत्नमाला । विल्वान्तरवृक्षः । भल्लातकः । इति राजनिर्घण्टः ॥

वीरपर्णं, क्ली, सुरपर्णम् । इति राजनिर्घण्टः ॥

वीरपत्नी, स्त्री, ( वीराणां पत्नी । यद्वा, वीरः पतिर्य्यस्याः । "नित्यं सपत्न्यादिषु ।" ४।१।३५। इति पत्युर्नकारादेशः । "ऋन्नेभ्यो ङीप् ।" ४।१।५। इति ङीप् । ) वीरभार्य्या । इत्यमरः ॥ (यथा, मार्क्कण्डेये । १२५ । ७ ।
"तेषामेतद्वचः श्रुत्वा वीरा वीरप्रजावती ।
वीरगोत्रसमुद्भूता वीरपत्नी प्रहर्षिता ॥"
नदीविशेषः । यथा, ऋग्वेदे ।१।१०४।४।
"च्चुसी कुलिशी वीरपत्नी
पयो हिन्वाना उदभिर्भरन्ते ॥"
"वीरपत्नी वीरस्य पालयित्री एतन्नामसंज्ञितास्तिस्रो नद्यः ।" इति तद्भाष्ये सायणः ॥)

वीरपत्रा, स्त्री, ( वीरप्रियाणि पत्राणि यस्याः । ) विजया । इति राजनिर्घण्टः ॥

वीरपानं, क्ली, वीराणां श्रमनाशाय पानम् । यथा,—
"वीरपानन्तु यत् पानं वृत्ते भाविनि वा रणे ।"
इत्यमरः ॥
("वा भावकरणयोः ।" ८।४।१०। इति विकल्पेन णत्वमपि । यथा, गो० रामायणे । ४।६।७२।
"मत्तोऽयमिति दुर्ब्बुद्धे माधवासवमत्तसे ।
मदीये संप्रहारेऽस्मिन् वीरपाणं समर्थ्यताम् ॥")

वीरपुष्पी, स्त्री, सिन्दूरपुष्पी । इति राजनिर्घण्टः ॥

वीरबाहुः, पुं, ( वीराः समर्थाः बाहवो यस्य । ) विष्णुः । यथा, "वीरबाहुर्विदारणः ।" इति तस्य सहस्रनामस्तोत्रम् ॥ ( धृतराष्ट्रपुत्त्रान्यतमः । यथा, महाभारते । १ । ६७ । १०३ ।
"उग्रो भीमरथो वीरो वीरबाहुरलोलुपः ॥"
रावणपुत्रः । इति रामायणम् ॥ वानरविशेषः । यथा, गो० रामायणे । ६ । १७ । १५ ।
"वीरबाहुः सुबाहुश्च नलश्च वनगोचरः ।")

वीरभद्रः, पुं, (वीराणां भद्रं येन ।) अश्वमेधाश्वः । वीरश्रेष्ठः । वीरणम् । इति मेदिनी ॥ शिवगणविशेषः । तस्योत्पत्तिर्यथा,—
"इत्याकर्ण्य महाकालः सम्यक् ज्ञात्वा सतीक्षयम् ।
सत्यं गते सती देवी त्वयीयाक्षे स्वजीवितम् ॥
जीर्णं स्थिते मुनौ तत्र तन्महाकालसाध्वसात् ।
रुद्रस्यालीवरौद्रोऽभूत् बहुकोपाग्निदीपितः ॥
ततस्तत्क्रोधवह्न्युग्रैराविरासीन्महाद्युतिः ।
प्रांशुः प्रतिमाकारः कालस्तलुः प्रकम्पनः ॥
उवाच च प्रणम्येशं भूमुखीं महतीं दधत् ।
आज्ञां देहि पितः किन्ते करवै दास्यमुत्तमम् ।
ब्रह्माण्डमेककवलं करवाणि त्वदाज्ञया ॥
इति प्रतिज्ञां तस्येशः श्रुत्वा स्रुतममन्यत ।
कृतकृत्यमिवात्मानं तं मुदा प्रत्युवाच ह ॥
महावीरोऽसि रे भद्र मम सर्व्वगणेष्विह ।
वीरभद्राख्यया हि त्वं प्रथितिं परमां व्रज ।
कुरु मे सत्वरं कार्य्यं दक्षयज्ञं क्षयं नय ॥"
इति काशीखण्डे ८९ अध्यायः ॥
( यथा च महाभारते । १२ । २८३ । ५१ ।
"वीरभद्र इति ख्यातो रुद्रकोपाद्विनिःसृतः ।
भद्रकालीति विख्याता देव्याः कोपाद्विनिःसृता ॥")

वीरभद्रकं, क्ली, ( वीरभद्रमेव । स्वार्थे कन् । ) वीरणम् । इति जटाधरः ॥

वीरभार्य्या, स्त्री, ( वीराणां भार्य्या । ) वीरपत्नी । इत्यमरः ॥

वीरमाता, [ ऋ ] स्त्री, ( वीराणां माता । ) वीरजननी । तत्पर्य्यायः । वीरसूः २ । इत्यमरः ॥ ( यथा, भागवते । ६ । १४ । ४० ।
"अन्तर्व्वत्नीमुपालक्ष्य देवीं स प्रययौ पुरीम् ।
पुनस्तत्र गतोऽब्दान्ते उर्व्वशीं वीरमातरम् ॥")

वीररजः, [स्] क्ली, ( वीराणां वीरभाविनां धारणार्थं रजः । ) सिन्दूरम् । इति राजनिर्घण्टः ॥ वीरस्य धूलिश्च ॥

वीररेणुः, पुं, (वीरा रेणव इव यस्य ।) भीमसेनः । इति त्रिकाण्डशेषः ॥

वीरवती, स्त्री, मांसरोहिणी । इति भावप्रकाशः ॥ ( विक्रमपुराधीश्वरविक्रमतुङ्गनृपकर्म्मचारिवीरवरस्य कन्या । यथा, कथासरित्सागरे । ५३ । ६० ।
"यस्य धर्म्मवती नाम भार्य्या वीरवती सुता ।
पुत्त्रः सत्यवरश्चेति त्रयं परिकरो गृहे ॥")

वीरवत्सा, स्त्री, ( वीरो वत्सः पुत्त्रो यस्याः । ) वीरजननी । इति जटाधरः ॥

वीरविप्लावकः, पुं, शूद्रधनेन होमकर्त्ता । यथा,—
"वीरविप्लावको जुह्वन् धनैः शूद्रसमाहितैः ।"
इति हेमचन्द्रः ॥

वीरवृक्षः, पुं, ( वीरनामको वृक्षः । ) भल्लातकः । इत्यमरः ॥ अर्ज्जुनवृक्षः ॥ इति हेमचन्द्रः ॥ विल्वान्तरः । इति राजनिर्घण्टः ॥ वृक्षविशेषः । देवधान इति भाषा । तत्पर्य्यायः । वीरतरः २ वृन्तवातः ३ अश्मरीहरः ४ । इति रत्नमाला ॥

वीरसूः, स्त्री, (वीरान् पुत्त्रानेव सूते इति । वीर + सू + क्विप् । ) वीरमाता । इत्यमरः ॥ (यथा, महाभारते । १ । २०० । ७ ।
"जीवसूर्व्वीरसूर्भद्रे बहुसौख्यसमन्विता ।
सुभगा भोगसम्पन्ना यज्ञपत्नी पतिव्रता ॥"
पुत्त्रप्रसविनी । यथा, ऋग्वेदे ।१०।८५।४४।
"वीरसूर्द्देवकामा स्योना शन्नो भवद्विपदे शं चतुष्पदे ॥"
"वीरसूः पुत्त्राणामेव सवित्री ।" इति तद्भाष्ये सायणः ॥)

वीरसेनं, क्ली, आरुकवृक्षः । इति राजनिर्घण्टः ॥

वीरसेनः, पुं, नलराजपिता । इति नैषधम् ॥ (यथा, महाभारते । ३ । ५२ । ५४ ।
"निषधेषु महीपालो वीरसेन इति स्मृतः ।
तस्य पुत्त्रोऽभवन्नाम्ना नलो धर्म्मार्थकोविदः ॥")

वीरसेनजः, पुं, ( वीरसेनात् जायते इति । जन + डः । ) नलराजः । इति नलोदयः ॥

वीरहा, [ न् ] पुं, ( वीरान् हन्तीति । हन + क्विप् । ) नष्टाग्निब्राह्मणः । इत्यमरः ॥ यस्याग्निहोत्रिणः प्रमादादिना कारणान्तरेण वा अग्निर्नष्टो निर्व्वाणः स्यात् स वीरहोच्यते । वीरयति शौर्य्यं कारयति इति वीर इ त् क तु शौर्य्ये इत्यस्मात् चुरादि णिः प्रेरणे अण्णात् पचाद्यचि वीरो यज्ञाग्निः तं हतवान् इति क्विपि वीरहा । इति भरतः ॥ ( यथा, वाजसनेयसंहितायाम् । ३० । ५ । "नरकाय वीरहणम् ।" "वीरहणं नष्टाग्निं शूद्रं वा ।" इति तद्भाष्यम् ॥ ) विष्णुः । यथा । वीरहा माधवो मधुः । इति विष्णुसहस्रनाम । वीरहन्तरि, त्रि ॥

वीरा, स्त्री, सुरा । क्षीरकाकोली । तामलकी । एलवालुका । पतिपुत्त्रवती । रम्भा । विदारी । दुग्धिका । मलपूः । क्षीरविदारी । इति मेदिनी । रे, ६८ ॥ पुस्तकान्तरे सुरास्थाने सुरा विदारीस्थाने गम्भारी इति पाठः । काकोली । महाशतावरी । गृहकन्या । ब्राह्मी । अतिविषा । मदिरा । इति राजनिर्घण्टः ॥ शिंशपावृक्षः । इति रत्नमाला ॥ (करन्धमराजपत्नी । यथा, मार्क्कण्डेये । १२३ । १ ।
"वीर्य्यचन्द्रसुता सुभ्रूर्व्वीरा नाम शुभव्रता ।
स्वयंवरे सा जगृहे महाराजं करन्धमम् ॥"
नदीविशेषः । यथा, महाभारते ।६।९।२२।
"पूर्व्वाभिरामां वीराञ्च भीमां मोघवतीं तथा ॥"
विक्रमशालिनी । यथा, मार्क्कण्डेये ।१२५।७।
"तेषामेतद्वचः श्रुत्वा वीरा वीरप्रजावती ।
वीरगोत्रसमुद्भूता वीरपत्नी प्रहर्षिता ॥")

वीराढ्यः, पुं, अश्ववेतसः । इति राजनिर्घण्टः ॥

वीरायकं, क्ली, आरुकम् । इति राजनिर्घण्टः ॥

वीराशंसनं, क्ली, ( वीरान् आशंसयति अद्य स्थास्यामि वा नवेति चिन्तां जनयतीति । आ + शंस + णिच् + ल्युः । ) अतिभयप्रदा युद्धभूमिः । इत्यमरः ॥

वीरासनं, क्ली, ( वीराणां साधकानामासनम् । ) भिक्षाटनाद्यर्थमुपवेशनम् । यथा,—
"दिवानुगच्छेत्ता गास्तु तिष्ठन्नूर्द्धं रजः पिबेत् ।

वीवधः, पुं, पर्य्याहारः। परित आह्रियतेऽसौ धान्यतण्डुलादिः। (यथा, माघे। २। ६४।
"निरुद्धवीवधासारप्रसारा गा इव व्रजम्।
उपरुन्धन्तु दाशार्हाः पुरीं माहिष्मतीं द्विषः॥")
मार्गः। पन्थाः। इत्यमरभरतौ॥ भारः। इति शब्दरत्नावली॥

वीवधिकः, त्रि, (वीवधेन हरतीति। वीवध + "विभाषा विवधवीवधात्।" ४। ४। १७। इति ठन्।) भारवाहकः। इति सिद्धान्तकौमुदी॥

वीहारः, पुं, (विहरन्त्यत्रेति। वि + हृ + घञ्। उपसर्गस्य दीर्घः।) महालयः। स तु बुद्धमन्दिरम्। इति शब्दमाला॥ विहारः। इत्यमरटीका॥

वुग, इ त्यागे। इति कविकल्पद्रुमः॥ (भ्वा०-पर०-सक०-सेट्।) इ, वुङ्गति। इति दुर्गादासः॥

वुट, इ क चित्याम्। इति कविकल्पद्रुमः॥ (चुरा०-पर०-सक०-सेट्।) पञ्चमस्वरी। इ, वुण्टति। क, वुण्टयति। चितिर्हिंसा। इति दुर्गादासः॥

वु(बु)द्धिः, स्त्री, (बुध + क्तिन्।) आत्मनो गुणविशेषः। सा त्रिविधा यथा,—
"प्रवृत्तिञ्च निवृत्तिञ्च कार्य्याकार्य्ये भयाभये।
बन्धं मोक्षञ्च या वेत्ति बुद्धिः सा पार्थ सात्त्विकी॥
यया धर्म्ममधर्म्मञ्च कार्य्यञ्चाकार्य्यमेव च।
अयथावत् प्रजानाति बुद्धिः सा पार्थ राजसी॥
अधर्म्मं धर्म्ममिति या मन्यते तमसावृता।
सर्व्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ तामसी॥"
इति श्रीभगवद्गीतायाम् १८ अध्यायः॥

वृ, क ञ वृतौ। इति कविकल्पद्रुमः॥ (चुरा०-पर०-सक०-सेट्।) क, वारयति। इति दुर्गादासः॥

वृ, ङ श संभक्तौ। इति कविकल्पद्रुमः॥ (क्र्या०-आत्म०-सक०-सेट्।) संभक्तिः सेवनम्। ङ श, वृणीते। वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः। इति दुर्गादासः॥

वृ, ञ वृतौ। इति कविकल्पद्रुमः॥ (भ्वा०-उभ०-सक०-सेट्।) ञ, वरति वरते। इति दुर्गादासः॥

वृ, न श ञ वृतौ। इति कविकल्पद्रुमः॥ (स्वा०-क्र्या०-च-उभ०-सक०-सेट्।) न ञ, वृणोति वृणुते। श ञ, वृणाति वृणीते। वकारस्य दन्त्यत्वात् संवृणोति इत्यादौ नानुस्वारस्य मकारः। ओष्ठ्यत्वाच्च प्रवृर्णतीत्यादौ आदिरणाविप्रूर्। न च दन्त्यस्य कथमोष्ठ्यकार्य्यमिति वाच्यं यतः स्वभावादोष्ठस्य वकारस्य ओष्ठकार्य्यं स्वाभाविकमेव। क्वचिद्दन्त्यमध्ये पाठः नन्दीकवर्गस्योभयस्थानं सम्भवति। इति दुर्गादासः॥

वृंहणः, त्रि, (वृहि + ल्युः।) पुष्टिकारकः। यथा। संयामे वृंहणो गुरुः। इति शब्दचन्द्रिका॥

वृंहितं, क्ली, (वृहि + क्तः।) हस्तिगर्ज्जनम्। तत्पर्य्यायः। करिगर्ज्जितम् २। इत्यमरः॥ (यथा, महाभारते। ६। १८। २।
"शङ्खदुन्दुभिघोषैश्च वारणानाञ्च वृंहितैः।
नेमिघोषै रथानाञ्च दीर्य्यतीव वसुन्धरा॥")

वृक, ङ आदाने। इति कविकल्पद्रुमः॥ (भ्वा०-आत्म०-सक०-सेट्।) ङ, वर्कते। ववृकेते। वर्कते। वरीवृक्यते। इति दुर्गादासः॥

वृकः, पुं, (वृणोतीति। वृ + "सृवृभृशुषिमुषिभ्यः कक्।" उणा० ३। ४१। इति कक्।) कुक्कुरप्रमाणहरिणघ्नजन्तुविशेषः। कोँच इति ख्यातः। हुण्डार इति हिन्दी भाषा। तत्पर्य्यायः। कोकः २ ईहामृगः ३। इत्यमरः॥ वत्सादनः ४ विरुक् ५ गोवत्सादी ६ छागभोजी ७ छागलान्त्री ८ जनाशनः ९। इति राजनिर्घण्टः॥ (यथा, भागवते। ३। १०। २३।
"श्वा सृगालो वृको व्याघ्रो मार्ज्जारः शशशल्लकौ॥")
काकः। इत्युणादिकोषः॥ (घोनकः। इत्युणादिटीकाधृतविश्वः। ३। ४१॥) वकवृक्षः। इति शब्दरत्नावली॥ सृगालः। इति हारावली॥ (यथा, मनुः। ८। २३५।
"अजाविके तु संरुद्धे वृकैः पाले त्वनायति।
यां प्रसह्य वृको हन्यात् पाले तत् किल्विषं भवेत्॥"
"वृकैः सृगालप्रभृतिभिः।"इति मेधातिथिः॥)
क्षत्त्रियः। अनेकधूपः। सरलद्रवः। इति भरतधृतरभसः॥ (तस्करः। इति निघण्टुः। ३। २४॥ * ॥ वर्कते धनप्राणानादत्ते इति। वृक आदाने + कः।) वज्रः। इति निघण्टुः। २। २०॥)

वृकदंशः, पुं, (वृकान् दशतीति। दन्श + अण्।) कुक्कुरः। इति हेमचन्द्रः॥

वृकधूपः, पुं, (वृकोऽनेकधूपः स एव धूपः। वृकः सरलद्रवस्तत्प्रधानो धूपो वा।) नानासुगन्धिद्रव्यकृतदशाङ्गादिधूपः। तत्पर्य्यायः। कृत्रिमधूपकः २। इत्यमरः॥ वकधूपः ३। इति तट्टीका॥ सरलद्रवः। टारपिन इति भाषा। तत्पर्य्यायः। पायसः २ श्रीवासः ३ श्रीवेष्टः ४ सरलद्रवः ५। इत्यमरः॥

वृकधूर्त्तः, पुं, (धूर्त्तो वृकः राजदन्तादित्वत् पूर्व्वनिपातः।) सृगालः। इति हारावली॥

वृका, स्त्री, अम्बष्ठा। इति रत्नमाला॥

वृकाक्षी, स्त्री, (वृकस्याक्षीव अक्षि चिह्नं यस्याः।) त्रिवृत्। इति रत्नमाला॥

वृकारातिः, पुं, (वृकस्यारातिः।) कुक्कुरः। इति शब्दमाला॥

वृकारिः, पुं, (वृकस्यारिः।) कुक्कुरः। इति राजनिर्घण्टः॥

वृकी, स्त्री, पाठा। इति राजनिर्घण्टः॥

वृकोदरः, पुं, (वृकस्येवोदरो यस्य। यद्वा, वृकः वृकनामकोऽग्निरुदरे यस्य।) भीमसेनः। तत्पर्य्यायः। भीमः २ मरुत्पुत्रः ३ किर्म्मीरनिषूदनः ४ कीचकनिषूदनः ५ बकनिषूदनः ६ हिडिम्बनिषूदनः ७। इति हेमचन्द्रः॥ बकवैरी ८ मारुतिः ९। इति जटाधरः॥ अस्य व्युत्पत्तिर्यथा,—
"कश्यप भीमसेनेन परिदृष्टः प्रतापवान्।
त्वया दृष्टस्य धर्म्मस्य रहस्यस्यास्य भेदकृत्॥
भविता स तदा प्रसन्नः कर्त्ता चैव वृकोदरः।
प्रवर्त्तकोऽस्य धर्म्मस्य पाण्डुसूनुर्महाबलः॥
यस्य तीक्ष्णो वृको नाम जठरे हव्यवाहनः।
मया दत्तः स धर्म्मात्मा तेन वायुर्वृकोदरः॥"
इति मात्स्ये ६५ अध्यायः॥

वृक्णं, त्रि, (व्रश्च + क्तः।) छिन्नम्। इत्यमरः॥ (यथा, सांख्यतत्त्वकौमुद्याम्।
"नहि पाणौ वृक्णे स्तने वा जाते कुमारी हस्तालाला वेति॥")

वृक्ष, ङ वृतौ। इति कविकल्पद्रुमः॥ (भ्वा०-आत्म०-सक०-सेट्।) सप्तमस्वरी। ङ, वृक्षते वरं कन्या। इति दुर्गादासः॥

वृक्षः, पुं, (व्रश्च छेदने + "स्नुव्रश्चिकृत्यृषिभ्यः कित्।"उणा० ३।६६। इति सः। स च कित्। "वृक्ष वरणे। अतोऽप्याहणोतीति वृक्ष इति क्षिप्ते गणपाठे व्रश्चिमग्रहणम्।"इति तट्टीकायामुज्ज्वलदत्तः।) स्थावरयोनिविशेषः। गाछ इति भाषा। तत्पर्य्यायः। महीरुहः २ शाखी ३ विटपी ४ पादपः ५ तरुः ६ अनोकहः ७ कुटः ८ सालः ९ पलाशी १० द्रुः ११ द्रुमः १२ आगमः १३। इत्यमरः॥ अगच्छः १४ विष्टरः १५ महीरुट् १६ कुचिः १७ स्थिरः १८ कारस्करः १९ नगः २० अगः २१ कुठारः २२। इति शब्दरत्नावली॥ विटपः २३ कुजः २४ वनस्पतिः २५ अंघ्रिः २६ शिखरी २७ कुटः २८। इति जटाधरः॥ कुञ्जः २९ चितिरुहः ३० अङ्घ्रिपः ३१ भूरुहः ३२ भूजः ३३ महीजः ३४ धरणीरुहः ३५ चितिजः ३६ शालः ३७। इति राजनिर्घण्टः॥ तस्य षड्जातिर्यथा,—
"कुरण्टाद्या अग्रबीजा मूलजास्तूत्पलादयः।
पर्व्वयोनय इक्ष्वाद्याः स्कन्धजाः सल्लकीमुखाः॥
शाल्यादयो बीजरुहाः संमूर्च्छजास्तृणादयः।
स्युर्वनस्पतिकायस्य षडेते मूलजातयः॥"
इति हेमचन्द्रः॥
"संस्वेदजापि विज्ञेया वृक्षगोपप्रगुणन्तवः।"
इत्यग्निपुराणम्॥
भवप्रदवृक्षा यथा,—
श्रीभगवानुवाच।
"आश्रमे नारिकेलश्च गृहस्थाश्च धनप्रदः।
शिविरस्य यदीशाने पूर्व्वे पुत्त्रप्रदस्तरुः॥
सर्व्वत्र मङ्गलार्हश्च तरुराजो मनोहरः।
रसालश्च पूर्व्वस्मिन् वृत्तां सम्पत्प्रदस्तथा॥
शुभप्रदश्च सर्व्वत्र सुरकारो निशामय॥
बिल्वस्य पनसश्चैव जम्बीरो बदरी तथा।
प्रजाप्रदश्च पूर्व्वस्मिन् दक्षिणे धनदस्तथा॥

